वाहयेदुपोत्थायावाहयेत् । ३० । यदि बहिष्परिध्याहुतिः स्कन्देदग्नीधं ब्रूयादेतां संकुष्य जुहुधीति । स यथावदानँ संपाद्य वषट्कृते मध्ये पाणिना जुहोति । तस्मै पूर्णपात्रं दद्यात् । ३१ ॥ भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेति बहिष्परिधि स्कन्नमभिमन्त्रयते । ३२ । कालातिपन्नौ पाथिकृत्यनागते च । ३३ । यदि प्राङ्निर्वपणात्पौर्णमास्याममावास्यायां वा कालप्रवृत्तिं स्पर्शयेदाग्नेयमष्टाकपालं पथिकृता व्यञ्जयेत् । ३४ । उत्सृष्टे चेद्ब्राह्मौदनिके महाग्निः प्रयायादनुगच्छेत्कालें वातिनयेत्पुनर्ब्रह्मौदनं पक्त्वानक्ताः समधि आदध्यात् । ३५ । ॥१॥

अग्निहोत्राय चेदुपसृष्टा निषीदेत्

यस्माद्भीता निषीदसि ततो नो अभयं कृधि ।
पशूनस्माकं मा हिंसीर्नमो रुद्राय मीढुषे ॥

इत्यभिमन्त्रयते ।

उदस्थाद्देव्यदितिरायुर्यज्ञपतावधात् ।
इन्द्राय कृण्वती भाग मित्राय वरुणाय च ॥

इत्युत्थाप्योदपात्रमूधसि मुखे चोपगृह्णीयाद्यस्यान्नं नाद्यात्तस्मै तां दद्यात् । १ । अग्निहोत्रं चेत्प्रागधिश्रयणात्स्कन्देत्समुद्रं वः प्रहिणोमीत्यप उपनिनीय

यदद्य दुग्धं पृथिवीमभक्त यदोषधीरत्यसृपद्यदापः ।
पयः पृथिव्यां पय ओषधीषु पयो अघ्न्यासु पयो वत्सेषु ।
पयो गृहेषु पयो ऽस्तु तन्नः ॥

इत्यभिमन्त्रयते । २ । यदि दुह्यमानावभिन्द्यादन्यामार्यकृतीं प्रक्षाल्य पुनर्दोहयेत् । ३ । यद्यधिश्रितं स्कन्देदिति व्याख्यातं । वारुणीं निगद्य वारुण्याज्यं जुहुयात् । ४ । यदि प्राचीनं ह्रियमाणं स्कन्देत्प्रजापते विश्वभृति तन्वां हुतमसि स्वाहेत्यभिमृशेच्छ्वावलीढवच्च निनयेत् । ५ । यद्यधिश्रितं शिरशिराय-

31) Kc बयान्ता the oth. exc. C2 °यात्तां; C2 संकव्य M2 Ba N संकुष्य Kc मंकल्व्या (*Kn*. मंकव्य); म not C2 Kc; cf. MS I.4.13:63.4-6; Āp.Śr.9.16.1.

32) cf MS.III.8 6:103.6-11; Āp.Śr.9.13.6, 7.

33) mss. exc. C2 N पथि°; cf. 5.1.7.27; Āp.Śr.9.10.17.

34) mss. exc. C2 Kc कालवृत्तिं; cf. 3.6.22; M2 Ba पथिकृत्वा, cf. Āp.Sr.9.4.4.

35) cf.1.6.3.4.

**2** 1) mss. exc. C2 यस्माद्भीतो, cf. 3.5.9, 10, MS.I.8.8:127.5; Āp.Śr.9.5.1-4.

2) mss. °त्यसर्पयदापः (C2 °त्युत्सर्पयदापः); cf. Āśv Śr.3.11.7; Ait. Br. 5 27; पयो before वत्सेषु only C2, cf. Āp.Śr.9.5.6.

3) mss. exc. C2 °कृतिं; cf. 1.6.1.13,14; MS.I.8.3:118.2,5,6; Āp.Śr.9.5.7.

4) M2 Ba C2 °शृतं; cf. MS.I.8 3:118.6-8; Āp.Śr.9.5.8, 6.1, 6.

5) mss. exc. S ह्रीयमा°; C2 तन्वा the oth. तन्वाम; M2 Ba °वच्चे C2 °वत्मं; cf. Āp.Śr.9.6.3.

6) C2 शृतं; N °शिरायन् M2 Ba S °मिरायन् (C2 corrupted); cf. Āp.Śr.9.6.10.

त्स्यात्सँमोषामुमिति ब्रूयाद्यं द्विष्यात् । ६ । विष्यण्णं मध्यमपर्णेन द्यावापृथिव्यर्चान्तःपरिध्यवनयेत्की' टावपन्नं प्राजापत्यर्चा वल्मीकवपायामवनीय '' भूरित्युपतिष्ठेत । विष्यण्णँ वा वल्मीकवपायां ' कीटावपन्नमन्तःपरिधि । ७ । अववृष्टे

मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् ।
मित्रः कृष्टीरनिमिषाभिचष्टे मित्राय हव्यं घृतवज्जुहोत ॥

इति पूर्वामाहुतिं जुहुयादन्यां दुग्ध्वाथ पुनरग्निहोत्रं जुहुयात् । ८ । यदि पूर्वस्यां हुतायामाहवनीयो ऽनुगच्छेदँग्निर्दारौ दारावग्निरिति हिरण्यं निधायोत्तरां जुहुयादन्यां दुग्ध्वाथ पुनरग्निहोत्रं जुहुयात् । ९ । यदि पूर्वस्यां हुतायां स्कन्देत्

यत्र वेत्थ वनस्पते देवानां गुह्या नामानि । तत्र हव्यानि गामय ॥

इति समिधमाधायोत्तरां जुहुयादन्यां दुग्ध्वाथ पुनरग्निहोत्रं जुहुयात् । १० । यदि रुद्रः पशूनभिमन्येत द्वयोर्गवोः स्थाल्या दोहनेन च दोहयित्वा समानीय '' सजूर्जातवेद इति पूर्वामाहुतिं जुहुयादन्यां दुग्ध्वाथ पुनरग्निहोत्रं जुहुयात् । ११ । यदि सप्ताहमतिशमायेताँग्ने दुःशीर्ततन इति पुरस्ताज्जुहुयादन्यां दुग्ध्वाथ पुनरग्निहोत्रं जुहुयाद्यदि तदतिशमायेत द्वादश रात्रीः सायँसायमाज्यं जुहुयात् । १२ । यदि रुद्रः प्रजा अभिशमयेतोत्तरपूर्वस्यां दिशि शतरुद्रियं जपँश्चङ्क्रम्येत । १३ । यस्याग्निमनुद्धृतँ सूर्यो ऽभिनिम्रोचेदुन्नीते ऽग्निहोत्रे ब्राह्मणो बहुविदुद्धरे'द्धिरण्यं बद्ध्वा दर्भेणाग्रतो हरेत्पश्चादग्निहोत्रेणान्वियाद्वरो दक्षिणा । १४ । अनुद्धृतं चेदभ्युदियाद्व्याख्यातं प्रणयनं । चतुर्गृहीतमाज्यमग्रतो हरेदुँषाः केतुना जुषतां स्वाहेति पुरस्तात्प्रत्यङ्मुख आज्यं जुहुयादु'पसाद्या तमितोरासीता होमात् । १५ । यस्योभा अनुगता इति व्याख्यातम् । १६ । ॥२॥

यस्याहुते ऽग्निहोत्रे पूर्वो ऽग्निरनुगच्छेदग्निना च सहाग्निहोत्रेण चोद्द्रवेदिँत एव प्रथमं जज्ञ इत्युद्धृतमभिमन्त्रयत ॥ इषे राये रमस्वेत्याधास्यमाने '' सम्राडसीत्यादधाति ॥ सारस्वतौ त्वोत्सौ प्रावतामित्याहितँ । हुते [ऽग्निहोत्रे] ऽग्नये ज्योतिष्मते ऽष्टाकपालं निर्वपे'द्वारुणँ यवमयं चरुम् । १ । य-

7) M2 Ba विषण्णं twice; mss. पृथिव्यर्चा°; mss. exc. C2 °निष्ठते; cf. Āp Śr.9.2.4,5; Kāty.Śr.25.14.9.

8) C2 °वृष्टेत् the oth. आववृष्टे; C2 जनान्यातय the oth. °तयति; C2 दुग्धाथ the oth. exc S दुग्ध्वा, cf. sū.9-12; cf. Āp.Śr.9.2.6.

9) Āp.Śr.9.2.8.

11-12) cf. MS.I.8.6:122.17-123.10; Āp.Śr.6.14.8-13.

12) M2 Ba °हमितिशमा° C2 °हमभिशमा°; C2 यदियदिदुग्ध्वाथतदनिशमायेत.

13) mss exc. C2 अभिशाम°; mss. exc. C2 °श्चक्रमेत.

14) mss. °नुधृतँ, °न्वीया°.

14-16) cf. MS.I.8.7:125 18-126 1; Āp.Śr.9.6.12-14; 7.1.10.

15) C2 अनुद्दृतं N S अनुधृतं M2 Ba अनुदितं.

16) mss. exc. C2 यस्योभावनुगताविति

**3** 1) mss. चोद्रवे°, यश; C2 रमस्वसहसेत्या°; [ ] not C2.

1-4) cf. MS I.8.8; Āp.Śr.9.9.1-9.

2) mss. exc. C2 S Kc स्वरेत; M2 Ba N °मुधृत्य C2 °मुद्धित्य S मुत्सृज्य; cf. MS.I.8.9:130.4.

स्याहुते ऽग्निहोत्रे ऽपरो ऽग्निरनुगच्छेदनुगमय्य पूर्वमपरस्मान्मथित्वा प्रणयेद्यदि त्वरेत तत एव प्राञ्च-मुद्धृत्य दक्षिणाग्निमन्वानीय सायंप्रातर्जुहुयाच्छ्वो भूते ऽग्निं समारोप्य मथित्वाग्नये तपस्वते जनद्वते पावकवते ऽष्टाकपालं निर्वपेत् । २ । सर्वानुगमेषु च

योअग्निं देववीतये हविष्मं आविवासति । तस्मै पावक मृडय ।ः

इत्येतया सद्यः पूर्णाहुतिं जुहुयात् । ३ । यस्याग्ना अग्निमभ्युद्धरेयुर्भवतं नः समनसावित्यभिमन्त्र्याग्नये ऽग्निमते ऽष्टाकपालं निर्वपेत् । ४ । सायमग्निहोत्रस्य चेत्कालो ऽतिपद्येत " दोषा वस्तोर्नमः स्वाहेति पूर्वस्यामाहुतावन्ततो ऽनुषजेत् । ५ । प्रातरग्निहोत्रं चेदभ्युदियादन्वग्निरुषसामग्रमक्शादित्युन्नीतमभिमन्त्रयत ' आहवनीयें यजमान " इहैव क्षेम्य एधि मा प्रहासीर्मामपुमिति नाम गृह्णात्या मुष्यायणमिति गोत्रं ॥ प्रातर्वस्तोर्नमः स्वाहेति पूर्वस्यामाहुतावन्ततो ऽनुषजेद्धुते [ऽग्निहोत्रे] मैत्रं चरुं निर्वपेत्सौर्यमेककपालमपि वेन्धानौ दंपती वाग्यतावनश्नन्तौ सर्वाह्णमुपासीयातां । द्वयोर्गवोः सायमग्निहोत्रं जुहुयाच्छ्वो भूते ऽग्नये व्रतपतये ऽष्टाकपालं निर्वपेत् । ६ । ॥३॥

यद्यर्वाक्शम्याप्रासादग्निरपक्षायेत्

इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा सँविशस्व ।

इति सर्वं संभृत्याहरति ।

सँवेशनस्तन्वे चारुरेधि प्रियो देवानां परमे जनित्रे ॥

इति निवपति । १ । यदि परस्तरमितरावन्वानीय सायंप्रातर्जुहुयाच्छ्वो भूते ऽग्नये पथिकृते ऽष्टाकपालं निर्वपेत्पथो ऽन्तिकाद्बर्हिरनड्वांश्च दक्षिणा । २ । यो ऽन्याग्निषु यजेत यस्य वान्ये ऽग्निषु यजेरन्त्सो ऽग्नये वैश्वानराय द्वादशकपालं [पुरोडाशं] निर्वपेत् । ३ । यस्याग्नयः सँसृज्येरन्मिथो ऽन्यैर्वेष्टिसंनिपाते वैविची पूर्वा । ४ । अग्नये शुचय इति व्याख्यातम् । ५ । यस्याहिताग्नेरिति व्याख्यातम् । ६ । यस्याग्निरनुगच्छेदिति व्याख्यातम् । ७ । यस्याजस्रमवछिद्येतान्तरितान्होमान्हुत्वाग्नये तन्तुमते ऽष्टाकपालं [पुरोडाशं] निर्वपेदपि वा पूर्णाहुतिँ हुत्वा नाद्रियेत होमान्सायँहोमेन प्रतिपद्येत । ८ । यस्याधिश्रिते ऽग्नि-

3) r. °नुगतेषु ? cf. Āśv.Śr.3 12.29; mss. exc. N °तया वा; cf. Āp Śr. 9.1.11.
4) cf Āp Śr.9.10.7,11.
5) cf. MS I 8.7:125.12; Āp.Śr.9.7.3.
6) C2 °भ्युदीयाद°; mss. exc. C2 S °क्शादि°; [ ] not C2; mss. exc. C2 °कपालमिति; mss. सर्वाह्ण°; cf. MS.I.8 9:128.11-129.11; 7:125.16-18; Āp.Śr 9.1.11; 7.6-9.

4 1) mss exc. C2 °क्षायेत, °परहूत for पर ऊत; C2 संभृत्य प्रत्याहरति; mss. °स्तन्मे.
1-2) cf. MS I 8.9:129.10-15; Āp.Śr.9.1.17-22.
3) [ ] not C2 S.
4) mss. सँसृजेर°, cf. 3.6.13; C2 वैविचि M2 Ba N वैशुची S वैशुचि; C2 सर्वा; cf. Āp.Śr.9.3.18, 23.
5-7) cf. MS.I.8.9: 129.15-130 4.
8) Kc °जस्रंविछि°; [ ] not C2 Kc; cf. Āp.Śr.9.4.4.
9) C2 °शृते; mss. exc. M2 Ba Kc पुरुषश्चाकृष्णः ; mss. सत्वम° (C2 दत्वम°); N S विष्यायात् M2 Ba विष्यात् ; C2 गामन्वयादात्यावर्तयेति; mss. °त्यापो, °द्रवेत् ; cf. MS.I.8.9:130.7-13.

होत्रे हविषि वा निरुप्ते सोमे वा प्रतते ऽनो रथो ऽश्वः पुरुषः श्वा कृष्णः शकुनिरन्यद्वा सत्त्वमन्तरा विया-यात्त्रयस्त्रिँशत्तन्तव इत्याहवनीये हुत्वा गामन्वावृत्यावर्तयती"दँ ·विष्णुर्विचक्रम इति पदँ योपयत्यपो ऽन्वतिषिञ्चेर्दपि वा गार्हपत्याद्भस्मादाय वैष्णव्यर्चाहवनीयात्पदमनुध्वँसयन्नुदद्रवेत् । ९ । अनुगमय्य पूर्वम-परस्मात्प्रणयेत् ।

यदग्ने पूर्व निहितं पदँ हि ते सूर्यस्य रश्मीनन्वाततन्थ ।
तत्र रयिष्ठामनुसंभरेतौँ सं नः सृज सुमत्या वाजवत्या ॥

इत्यादधाति । १० । ॥४॥

यदि पृषदाज्यँ स्कन्देद्धिरण्यमन्तर्धाय भूयो ऽभ्युन्नीयाश्वेनोपघ्राप्य " मनो ज्योतिर्वर्धतां भूतिरित्ये-ताभ्यामाहुती जुहुयात् । १ । यदि पशुरुपाकृतः पलायेतान्यँ वा भावमापद्येत वायव्याँ यवागूं निरुप्या-थान्यं तद्रूपं तद्वर्णं तद्वयसमुपाकरोति । वायव्यया यवाग्वा प्रचर्य पशुपुरोडाशेन प्रचरेत्सह स्विष्टकृ-दिडाँ वायव्यायाः पशुपुरोडाशस्य चैँष एव मृते कल्पः । २ । स चेत्प्रत्यानीयेत " त्वं नो अग्ने " स त्वं नो अग्न इत्येताभ्यामाहुती जुहुयादे॑तावादिनोप्तस्य पशोरवद्येत्स तावन्तमेव कालं तिष्ठेद्यावदि-तरः शेषो भवति । ३ । यद्यूर्ध्वमुत्पतेदु"दु तिष्ठ स्वध्वरो"र्ध्व ऊ षु ण इत्येताभ्यामाहुती जुहुयात् । ४। यदि यूपमावृहेच्चालयेद्वा " नितानस्त्वा मारुतो निहन्त्विति यथावसितमस्य परिषेकं कुर्यात् । ५ । यदि रशनां भिन्द्याद्द्रुह्येद्द्वा " त्रयस्त्रिँशत्तन्तव इत्येतया ग्रन्थिँ संधायैतयैव जुहुयात् । ६ । यदि स्वरुर्नश्येत्स्वधि-तिर्वान्यँ यूपशकलं जुह्वामवत्वा स्वरुं कुर्यात्तथा स्वधितिमञ्जयादे॑वमेव चषालम् ।

इष्टस्य दुरिष्टस्य ये यज्ञमभिरक्षन्तः ।
पशूनस्माकं मा हिँसीर्यज्ञमन्वभिरक्षताम् ॥

इति जुहुयात् । ७ । यदि शकृन्मूत्रँ वा कुर्यात्पुनरुपपाय्याभ्युक्ष्य व्याहृतिभिरेव जुहुयात् । ८ ॥ यस्मा-द्भीत उदप्रोष्टेत्युत्प्लवमाने जुहुयात् । ९ ॥ यस्माद्भीत उदवेपिष्टेत्युद्वेपमाने । १० ॥ यस्माद्भीत उदवाशि-ष्टेत्युद्वाश्यमाने । ११ ।

10) C2 संभवोतौँ· mss. वः , cf. Āp. Śr.9.10.17.

5 1) mss. exc. C2 भूतिरितिद्वाभ्या°; cf. MS.IV.8.9:118.6-10, Āp. Śr 9.17.1, 2.

2) M2 Ba N निरूप्या°; mss वायव्या for वायव्यया; S °कृदिडा M2 Ba °कृदिडाँस्य; S वैष; C2 घने; cf 5.1.4. 1; Āp.Śr.9.17.6; 18.4-6, 8.

3) S एतावो°; C2 श्लेषो.

4) cf. Āp.Śr.9.18 10; MS.II.7.4: 78.11-14

5) Kc यथावस्थितम°, r. यथावहितम°, cf. 1.8.2.18.

6) C2 छिंद्याद्रुद्येद्वा Kc छिंद्याद्द्रोद्वा.

7) Kc C2 स्वधितिर्वानक्ते ऽन्यं; mss. exc. C2 Kc °मुंक्त्वा; N इष्टस्य, r. स्विष्टस्य ?; mss. °भिरक्षन्तः, °न्वाभिर°.

8) cf. Āp.Śr.9.18.9.

10) S उदवोपिष्ठे° the oth. उदवा-पिष्टे°; mss. °द्वेप्यमाने; cf. Āp.Śr. 9.18.3.

11) cf. Āp.Śr.9.17.6.

यस्माद्भीतो निषीदसि ततो नो अभयं कृधि ।
पशूनस्माकं मा हिंसीर्नमो रुद्राय मीढुषे ॥

इति निषण्णे । १२ ।

अग्निर्भगः सवितेदं जुषन्तां प्रजापतिर्वरुणो...य...मह्यम् ॥
यो नो द्वेष्टि तनूँ रभस्वानागसो यजमानस्य वीरान् ॥

इति रममाणे जुहुयात् । १३ । यदि पशूखा स्रवेत्

उखां स्रवन्तीमगदामकर्माग्निर्होता पृथिव्यन्तरिक्षम् ।
यत्र चुश्चुतदग्नावेव तन्नाभिप्राप्नुयुर्निर्ऋतिं परस्तात् ॥

इत्यभिमन्त्रयते । १४ । यदि श्येनो वपां हरेदन्यद्वा सत्त्वमन्यद्वावदानम्

यदवामृक्षच्छकुनिर्मुखेन निर्ऋते तव ।
अग्निष्टद्रक्षतु हव्यवाड् घृतसूदनः ॥

इति जुहुयात् । १५ । यदवदानं न विन्देत्तदाज्यस्यावद्येद्धृदयनाशे ऽन्यं पशुमालभेत । हिरण्ये द्विराज्यस्यावद्येत् । १६ । यदि कामयेत ते पशुँ व्यमथिषत त आर्तिमार्छेयुरिति " कुविदङ्ग यवमन्तो यवं चिदिति नमउक्तिमत्यर्चाग्नीध्रीये जुहुयात् । १७ । यद्यष्टापदी स्यादष्टापद्या गर्भं शूले कृत्वा मृदा प्रलिप्य शामित्रीये निग्वानयेत्तस्याधस्तादयस्पात्रमुपकृष्य श्रपयेत्तस्य रसेन प्राक्स्विष्टकृतो " हिरण्यगर्भ इत्यष्टाभिः प्रत्यृचमा[ज्या]हुतीर्जुहुयाद्धिरण्यमष्टापृडं दक्षिणा । सँस्थिते " मही द्यौः पृथिवी च न इति पशुश्रपणे गर्भमुपवपति ॥ नमो महिम्न इति पञ्चभिरुपतिष्ठते । १८ । ॥५॥

सत्त्रे चेत्प्रागपवर्गाद्यूपो विरोहेत्त्वाष्ट्रं बहुरूपमालभेत । १ ॥ प्रजापतिर्मनसि सारस्वतो वाचि विसृष्टायां धाता दीक्षायां ब्रह्म व्रत इतिप्रभृतिभिर्यज्ञतनूर्यदि पूर्वस्यामार्तिः स्यात्तामुत्तरस्या सँसृज्य

12) mss पशूतन्वानामा, cf. sū.7; cf. 3.2.1.

13) mss. अग्नेर्भाग·; S जुषेतां the oth. exc. C2 जुषतां; mss. प्रजापतेर्वरुणायमह्यं, cf. MS.I.3.38 44.4-5, C2 N S तनुँ; mss. °नुषसो inst. of °नागसो; mss. exc C2 वीरमिति; cf Āp Śr.7.17.2.

14) N S पशुरुखाँ (M2 Ba only रुखो); mss. exc. C2 स्रवंति: mss °ग्निहोत्रंपृथिवीमंतरिक्षम् (thus *Kn.*); mss. यत्रच्च [C2 श्च] तन [C2 तं] न्नइतितन्ना (*Kn.* °वेवैं); r. °प्राप्नुयाग्नि° ? mss पुरस्तात्; cf. Āp.Śr.9.4.1; 18.12.

15) mss. यदिवा°; C2 °मृचन्नश° the oth. °मृचेतश°; M2 Ba घृतस्य°; cf. Āp.Śr.9 17.4; 18.15.

16) C2 यद्यदवदानं.

16-18) cf. MS.IV.8.9:118.13-119 2; Āp Śr 9 18.14-19.13.

17) mss exc. C2 विमथिषत; M2 Ba C2 °उक्तिप्रत्य°; C2 M2 °ग्नीध्रिये.

18) mss. °यस्यात्रमु°; [ ] only C2; N °ष्टापृष्ठ, cf. 3.6.16; v. *Schröder* Z.D.M.G. 49.163; C2 गर्भमु° the oth. राभुमु°; mss. exc. C2 °पचयति; cf. MS.I[illegible].7.15: 96.13-97.10; 16:100.8, 5 10: 61.10-62.2.

**6** 1) mss. exc. C2 N Kc मूत्रे, C2 वरोहेवा° the oth. विरोहेतत्वा, C2 लंभेरं; cf. Āp.Śr.9 9.15.

2) cf. KS.34.14-16.

जुहुयात्प्रजापतिर्मनसि सारस्वतो वाचि विसृष्टायां स्वाहेति । यद्युत्तरस्यां " सारस्वतो वाचि विसृष्टायां धाता दीक्षायां स्वाहेत्येवं यस्यांयस्यामार्तिः स्यात्तामुत्तरया संसृज्य जुहुयादपि वा त्रिभिरनुवाकैस्त्रीणि चतुर्गृहीतानि जुहुयात् । २ । यदि राजानमपहरेद्यो नेदिष्ठी सोमः स्यात्तमभिषुणुयात्सोमविक्रयिणे किंचिद्दद्यात् । ३ । यदि सोमं न विन्देत्पूतीकानभिषुणुयाद्यदि न पूतीकानथार्जुनानि रोहिततूलानि हैमवतस्य स्थाने बभ्रुतूलानि मौजवतस्य । यदि नार्जुनान्यथ याः काश्चारण्या ओषधीरभिषुणुयात् । ४ । प्रतिदुहा प्रातःसवने सोमाञ्छ्रीणन्ति ' शृतेन माध्यंदिने ' दध्ना तृतीयसवने । ५ । पञ्च दक्षिणा ददाति । ६ । संस्थाप्य येन कामयेत तेन पुनर्यजेत । तत्र यत्कामयेत तद्दद्यात् । ७ । यद्दक्षिणास्वदास्यन्स्यात्तस्याध्वर्यवे वरं दद्यात् । ८ । यदि सर्पतां प्रस्तोता विच्छिद्येत ब्रह्मणे वरं दत्त्वा तमेव पुनर्वृणीते । यद्युद्गातादक्षिणेनेष्ट्वा तेन पुनर्यजेत । यदि प्रतिहर्ता सर्ववेदसं दद्यात् । ९ । यदि प्रातःसवने ग्रावा शीर्येत द्युतानस्य मारुतस्य साम्ना स्तुयुर्यदि माध्यंदिने बृहता ' यदि तृतीयसवनेऽनुष्टुभा । १० । यदि प्रातःसवने कलशो दीर्येत वषट्कारनिधनं ब्रह्मसाम कुर्याद्यदि माध्यंदिने श्रायन्तीयं ब्रह्मसाम कुर्याद्यदि तृतीयसवने वारवन्तीयमग्निष्टोमसाम कुर्यात् । ११ । यदि नाराशंसा उपदस्येयुर्यंयं ग्रहमुपतिष्ठेरंस्तस्यतस्य बिन्दुमवनयेत् । १२ । यदि हुताहुतौ पीतापीतौ वा सोमौ संसृज्येयातामन्तःपरिध्यङ्गारं दक्षिणापोह्य

हुतस्य वाहुतस्य वा पीनापीतस्य सोमस्येन्द्राग्नी पिबतं सुतं स्वाहा ॥

इति जुहुयात् । १३ ॥ प्रजापतये स्वाहेत्यभक्षणीयमुत्तरयोः पूर्वस्मिन्नुपरवेऽवनयेत् । १४ ॥ इन्दुरिन्दुमुपागात्तस्य त इन्दविन्द्रपीतस्येन्द्रियावतो मधुमतो मधुमतः सर्वगणस्य सर्वगण उपहूतस्योपहूतं भक्षयामीत्यववृष्टं भक्षयेत् । १५ । यदि कूर्मं न विन्देत्कर्कं कच्छपमुपदध्याद्यदि तं न विन्देत्पुरोडाशं कूर्माकृतिं श्रपयित्वा हिरण्यपृडमुपदध्यादुभयतो हिरण्यमित्येके । १६ । यद्याग्रायणः स्कन्देदुप वा दस्येदितरेभ्यो ग्रहेभ्यो निर्गृह्णीयाद्यदीतरे ग्रहाः स्कन्देयुरुप वा दस्येयुराग्रायणान्निर्गृह्णीयात् । १७ । द्रोणकलशे चेन्न विन्देत्पूतभृति वा हिरण्यमृजीषेऽप्यस्याभिषुणुयाद्धिरण्यमभ्युन्नयेद्धिरण्येन सह जुहुयात् । १८ । सदसि [अवस्थितं] चेच्चमसमभ्युपाकुर्याद्धिरण्यगर्भ इत्याग्नीध्रीये पूर्णाहुतिं जुहुयात् । १९ । यदि ध्रुवः स्कन्देत्प्रवर्तयेद्यायुर्धा असीत्यभिमन्त्र्य वरं दत्त्वावस्थापयेद्यद्युपदस्येत्स्वाहा

3-8) cf. Āp.Śr.14.24.9-21; 25.4.
4) mss. exc. C2 Kc हैमवतः ; mss. exc. C2 बभ्र°; mss. मौजवनो (C2 N मौ°).
6-8) =सं 23.25.
9) cf. Āp.Śr.14.26.3-5
10) Kc नुष्टुभाभंवे C2 नुष्टुवाभंवेपवमाने.
10-11) cf. Āp.Śr.14.25.7-11.
12) cf. Āp.Śr.14.28.1.
13) Kc °ङ्गारान् C2 °रा; cf Āp.Śr. 14.30.2
14) mss. exc. C2 °मूर्नयोः.
15) cf. Āp.Śr.14.29.2.
16) mss. °पृष्टम्° resp. °ष्ठ°.
17) mss. exc. C2 °प्रयणः ; mss. exc C2 Kc निगृ° twice; M2 Ba Kc °प्रयण°; cf. MS.IV 8.9: 117.15-118.5.
17-21) cf Āp.Śr 14.27.1-6; 24.7.
19) [ ] not C2 Kc.
20) cf. MS.IV.6.6.

दिव आप्यायस्वेति पर्यायैस्त्रिः सोममाप्याययेत् । २० । यदि सोमः स्कन्देद्व्याख्यातं पृषदाज्येन । यद्युपदस्येद्धिरण्यमृजीषे ऽप्यस्याभिजुहुयाद्धिरण्यमभ्युन्नयेद्धिरण्येन सह जुहुयात् । २१ । यदि राजाभिद्ध्येत ग्रहानध्वर्युः स्पर्शयेत्स्तोत्राण्युद्गाता शस्त्राणि होताथ यज्ञं संभृत्यानुपूर्वं चेष्टेरन् । २२ । पञ्च दक्षिणा ददाति । २३ । संस्थाप्य येन कामयेन तेन पुनर्यजेत । तत्र यत्कामयेत तद्द्यात् । २४ । यद्दक्षिणास्वदास्यन्स्यात्तस्याध्वर्यवे वरं दद्यात् । २५ । पुरा द्वादश्या दीक्षेरंस्तंयैवैनमृत्विजो याजयेयुः । २६ । ॥६॥

यद्यर्वाक्स्तुयुर्यावतीभिर्न स्तुयुस्तावतीभिरतिस्तुयुर्भूयोऽक्षरतराभिर्वा त्रैधं वाग्निष्टोमसाम कुर्यात् । १ । यदि सर्वैः पर्यायैरस्तुतमभिव्युच्छेत्पञ्चदशभिर्होत्रे स्तुयुः पञ्चभिः पञ्चभिरितरेभ्य । यदि द्वाभ्यां होत्रे मैत्रावरुणाय चान्यतरेण ब्राह्मणाच्छंसिने ऽछावाकाय चान्यतरेण । यद्येकेन पञ्चभिर्होत्रे स्तुयुस्तिसृभिस्तिसृभिरितरेभ्यः । २ । यस्याश्विने शस्यमाने सूर्यो नोदियादश्वं श्वेतं रुक्मप्रतिमुक्तं पुरस्तात्प्रत्यङ्मुखमवस्थापयत्यादित्यं बहुरूपमालभेत । सौर्यो ऽजः श्वेत उपालम्भ्यः । ३ । उपांशुदेवता समृतयज्ञे । संभारयजूंषि व्याख्यातानि । वृषण्वती प्रतिपदुभयवन्त्याज्यानि प्रतिवन्ति वा । ४ ॥ संवेशायोपवेशाय गायत्र्याभिभवे छन्दसे स्वाहेति पुरस्तात्प्रातःसवनस्य जुहुयात्संवेशायोपवेशाय त्रिष्टुभाभिभवे छन्दसे स्वाहेति पुरस्तान्माध्यंदिनस्य सवनस्य जुहुयात्संवेशायोपवेशाय जगत्याभिभवे छन्दसे स्वाहेति पुरस्तादार्भवस्य पवमानस्य जुहुयात् । ५ । यदि रथंतरसामा सोमः स्यादार्भवे पवमाने बृहत्कुर्याद्यदि बृहत्सामा माध्यंदिने पवमाने रथंतरम् । ६ । यदि समाने जनपदे विद्विषाणयोः सुत्याः संनिवपेयुर्यद्यग्निष्टोमः परस्योक्थ्यं कुर्याद्यद्युक्थ्यः षोडशिनं । यदि षोडश्यतिरात्रं । यद्यतिरात्रो विश्वजितमभिजितं वा सर्वस्तोमं कुर्यात् । ७ । यदि सोमो ऽतिरिच्येत होतृचमसमुख्यानुन्नीय स्तोत्रमुपाकरोत्यैन्द्रावैष्णवं होतानुशंसति । ८ । यदि प्रातःसवने "ऽस्ति सोमो अयं सुत इति मरुत्वतीषु गायत्रेण

21) cf. 3.5.1, MS.IV.8.9·118.5-6.
22) cf. Āp.Śr.14.25.1, 3.
26) Kc दीक्षेततऽप्येवैन°; cf. Pañc.Br. 9.9 15; Āp.Śr.14.24.17, 20.

**7** 1) Kc स्तुयुस्तावतीभिर्न स्तुयुरल्पीयोऽक्षराभिर्वा स्वारं वाग्निष्टोमसाम, cf. Pañc.Br.9.3 8-11; M2 Ba °रक्षतराभिर्वा.
2) C2 begins अतिस्तुते यावतीभिरतिस्तुयुस्तावतीभिव्युच्छेत्, cf. Pañc.Br. 9.3 3; Āp Śr.14 23.12-14.
3) C2 नोदीया°; mss. exc. Kc उपालम्भ्य; cf. Āp.Śr.14.24.1.
4) mss. exc C2 °देवतः, प्रैतिवंति; cf. 2.1.1 17; Āp.Śr.14.19 1, 4, 5.
5) mss. त्रिष्टुबाभिभवे; r. with *Caland*: गायत्र्या ऽभि°, त्रिष्टुभो ऽभि°, जगत्या ऽभि°; cf. Āp.Śr.14.26.2; 19 1
6) mss. °साम twice; cf. Āp.Śr.14. 19.7.
7) mss. exc. Kc सुत्याः ; mss. रात्राद्विश्व°; cf. Āp Śr.14.19.8, 9; 20. 4. (text as *Caland* ; *Kn*. r. ऽविद्विषा° and made two sūtras, ended sū.7 with संनिवपेयुः ; *Kn's* sū.9-11 are in the text 8·10)
8-10) cf. Āp Śr.14.18.2-14.
9) C2 वषमहां; mss. exc C2 गौरीवतेन.

स्तुयुर्यदि माध्यंदिने " बण्महं असि सूर्येत्यादित्यवतीषु गौरीवितेन स्तुयुर्यदि तृतीयसवने विष्णोः शिपिविष्टवतीषु गौरीवितेन स्तुयुः । ६ । उक्थ्यानि वातिप्रणयेद्यद्युक्थ्ये वातिरिच्येत षोडशिनं ' यदि षोडशिनि वातिरात्रं । यद्यतिरात्रे विष्णोः शिपिविष्टवतीषु बृहता स्तुयुः । १० । ॥७॥

यद्युख्यो ऽनुगच्छेत्प्रणीय पुनः प्रवृज्ज्यान्नित्याः समिध आधाय " यास्ते अग्न आर्द्रा योनयः

कामयमानो वना त्वं यन्मातॄरजगन्नपः ।
न तत्ते अग्ने प्रमृषे निवर्तनं यद्दूरे सन्निहाभवः ॥ a)
साकं हि शुचिना शुचिः प्रशास्ता क्रतुनाजनि ।
विद्वं अस्य व्रता ध्रुवा वया इवानुरोहते ॥ b)

इति तिसृभिः । कृष्णं वासो देयं कृष्णा वा गौः । १ । यद्युखा भिद्येत महावीरो वा कपालानि चूर्णयेत्तेषं पिष्ट्वान्यया मृदा संसृज्य " य ऋते चिदभिश्रिष इत्युखां कुर्यात्तथा महावीरम् । २ । यदि दीक्षितस्योपतपेदुदकांस्य एकविंशतिं यवानोप्यैकविंशतिं दर्भपिञ्जूलानि चावधाय " जीवा नाम स्थ ता इमं जीवयतेति दीक्षितस्य नामग्राहं पर्यायैरुदकांस्यमभिमृशेत्प्राणापानौ त उपांश्वन्तर्यामौ पातामसर्विति दीक्षितमभिमन्त्र्य " पुष्टपत इत्याग्नीध्रीये पूर्णाहुतिं जुहुयाद्या ओषधयः प्रथमजा इत्यनुवाकेन चत्वारो ब्राह्मणा नानागोत्रा उदकांस्येन दीक्षितमभिषिञ्चेयुर्न पुनः कुर्यात् । ३ । यदि दीक्षितः प्रमीयेत तीर्थेनारणी हृत्वातीर्थेन शरीरं दक्षिणतो विहारस्य निर्मन्थ्येन दग्ध्वा कृष्णाजिने ऽस्थीन्युपनह्य प्रेनाग्निषु पुत्रं भ्रातरं वा दीक्षयित्वा यजेयुर्दक्षिणस्यां श्रोणावस्थीन्युपनिधाय यामेन मार्पराज्ञीषु पराचीषु प्रतिहितासु स्तुयुस्तां जपन्तो दीक्षिना होतृप्रमुखाः सव्यानूरूनाघ्नाना मार्जालीयं सव्यं त्रिः परियन्त्यग्न आयूंषि पवम इति प्रतिपदं ' रथंतरं पृष्ठम् । ४ । यद्येकाहो भवति संस्थिते दहनमस्थीनि हरेयुः । ५ । यदि सत्त्रे संस्थिते संवत्सरं विहारमिन्धीता जुह्वतो यजमानाः । ६ । समाप्ते संवत्सरे ज्योति-

10) mss. exc. C2 Kc उक्थानि, यद्युक्थे; mss. exc Kc वानिरिक्ते· यदिषोडशिनंवातिरात्र (C2 not यदि) (*Kn* °युक्थ्ये, not यदि, षोडशिने, °तिरात्राद्दि°)

**8** 1) mss. यद्युत्तो; a) C2 °भ्रेरजगंन्नयं the oth. °तृ रजन्नयः ; b) mss विद्वं भ्रमिमव्रन (C2 °ता); वा not C2; cf MS III.4 7·53.11-18; Āp.Śr.14.34.1, 2. RV.3 9 2; 2 5.4.

2) N °त्वेषं the oth. °त्येषं; C2 ऋते· तिदविषियइत्युषां the oth हृतविदधिश्रिय इति उखां; mss महावीरः ; cf Āp.Śr.14.33.9,10; 15.17·7.8; RV 8.1.12; MS.IV.9.12·133 12.

3) mss. एकविंशति; mss exc. C2 °कविंशति. इमं भ्रम, पुष्टतइत्या°; C2 चतुरोब्राह्मणान्नानागोत्रानुद°; cf MS. IV.8.7:115.5-17; Āp Śr.14.20. 5-21 7; MS.II.7 13.

4) *Kn* हृत्वा तीर्थेन, cf.8 19 12; M2 Ba N विहारं; mss. exc Kc निर्मथेन, याजयेयुः ; mss. exc. C2 वामेन; पराचीषु not C2; mss. exc C2 होतृमखाः ; mss. प्रतिपदं

4-7) cf. Āp.Śr.14.21 8-22 12 ; Pañc Br.9 8.

6) N S Ba °जुह्वते M2 °ता; mss exc. C2 Kc यजमानः.

7) C2 °स्तोमास्थि°; mss. exc. C2 पवमानः ; mss. सप्तदश.

ष्टोमो ऽस्थियाजनीय । ऐन्द्रवायवाग्रा ग्रहा मैत्रावरुणाग्रा वा । स्तोत्रेष्वस्थीन्युपनिदध्युः । त्रिवृतः पवमानाः । सप्तदशो शेषः । समानमन्यत् । ७ । यद्याहवनीयो ऽनुगच्छेदाग्नीध्रीयात्प्रणयेद्यद्याग्नीध्रीयः शालामुखीयाद्यदि शालामुखीयो गार्हपत्याद्यदि गार्हपत्यस्तत एव मथ्यः । ८ । यदि सत्राय दीक्षेताथ साम्युत्तिष्ठेत्सोममपि विभज्य विश्वजितातिरात्रेण सर्वस्तोमेन सर्वपृष्ठेन सर्ववेदसदक्षिणेन यजेत यजेत । ९ । ॥८॥

॥ इति मानवसूत्रे प्रायश्चित्ताध्यायः समाप्तः ॥

8) cf. Āp.Śr.14.24.3. 9) mss. exc. C2 सोप्युत्तिष्ठे°; Āp.Śr.14.23.1-3.

अथातः प्रवर्ग्यकल्पं व्याख्यास्यामः । प्रवर्ग्यं संभरिष्यन्नमावास्यायां पौर्णमास्यामापूर्यमाणपक्षस्य वा पुण्ये नक्षत्रे सो ऽयं स्वविधानप्रकृतिः । १ । यथोपदिष्टं मन्त्रानुपूर्व्याद्द्रव्यैरभिसंबन्धः । २ । न प्रथमयज्ञे ज्योतिष्युक्थ्ये च प्रजाकामः पशुकामः । प्रजाकामानां च बृहस्पतिसवो विहितः । ३ । विज्ञायते ऽपशिरा वा एतस्य यज्ञो यस्य न प्रवृञ्जन्ति । ४ । न द्वादशातिप्रवृञ्ज्यादित्युपदेशः । ५ । पश्चाद्गार्हपत्यस्य कांस्ये चमसे वा दधि गृहीत्वा " गायत्रीं छन्द इति प्रपद्य " दधिक्राव्णो अकारिषमिति दधि त्रिः प्राश्य " युञ्जत इति समिधमादधाति दीक्षितस्य । ६ । आहुतिं जुहुयाददीक्षितस्य । ७ । उत्तरतो गार्हपत्यस्य संस्तीर्णे चतस्रो ऽभ्रीः प्रयुनक्ति खादिरीं वैणवीं वैकङ्कतीमौदुम्बरीमौदुम्बरं स्रुवं चादत्ते ' सावित्रेण " देवस्य त्वेति तांतामपि वोहेन्मन्त्रम् । ८ ॥ उत्तिष्ठेत्युपोत्थाय " प्रैतु ब्रह्मणस्पतिरित्यभिप्रव्रज्याग्रेणाहवनीयं कृष्णाजिनमास्तीर्य तस्मिन्संभारान्निवपति पश्चार्धान्मृदं वल्मीकवपां वराहविहृतं पूतीकं पिष्टं ' पूर्वार्धमजापयः । ९ । खादिर्या मृदं प्रहरति " देवी द्यावापृथिवी इति ॥ मखाय त्वेत्यपादाय " मखस्य त्वेत्युत्तरस्मिन्कृष्णाजिनान्ते निवपति । १० ॥ देवीर्वम्रीरिति वैणव्या वल्मीकवपामिती" यत्यग्र आसीदिति वैकङ्कत्या वराहविहतं ॥ देवी ऊर्जाहुती इत्यौदुम्बर्या पूतीकमिन्द्रस्यौजो ऽसीति स्रुवेणाजापयसः । ११ ॥ अग्नेस्तनूरसीति सर्वेभ्यो ऽपादानेभ्य उपनिवपति यावदाप्तम् । १२ । अवशिष्टामुखासंभारैः संसृज्य " मधु त्वेति संनयति । १३ । पिण्डं समवदानीकृत्वा "युश्रेहीत्यश्वेनोपघ्राप्य त्रेधं कृत्वा घर्मकपाले लेपं निमार्ष्टि । १४ ॥ मखस्य शिरो ऽसीति तमभिमृशति । १५ ॥ यज्ञस्य पदे स्थ इत्यङ्गुष्ठाभ्यां मुखं करोति यावन्मेदाहुतिभक्षेभ्यश्च भविष्यति । १६ । वायव्यप्रकारान्त्र्युद्धौ महावीरान्करोति " गायत्रो ऽसीति प्रथमं " त्रैष्टुभो ऽसीति द्वितीयं " जागतो ऽसीति तृतीयं ' सर्वान्वा मन्त्रैः । १७ ॥ मखस्य रास्नासीति रास्नां करोति द्व्यङ्गुले ऽधस्ताद्द्वारस्य । १८ ॥ सूर्यस्य हरसेति सिकतासु प्रतिष्ठा-

1 Cf. MS.IV.9.1,2, Āp.Śr.15.1-4.

1) N ॐ °प्रभृति°. cf. Kāty.Śr.26 2.5 comm.

2) M2 Ba °संबद्धः.

3) mss. °ष्यूक्थे., cf. Āp.Śr.15.12.10, 11.

4) N S प्रव्रजंति.

5) mss. °प्रवृञ्ज्या°; mss. exc. N °पदेशाः (M2 °शा).

6) दधि गृहीत्वा only S.

6-8) text as *Caland*, Āp.Śr.transl. 15.1.2 note (*Kn.* sū.7 : दीक्षितस्या° unto गार्हपत्यस्य).

9) mss exc. S P3 °विहितं, mss. exc. P3 पूतिकं; M2 पिष्टं वा.

10) mss. exc. S मृदि.

11) mss. exc. S P3 °वपायामिति; M2 Ba वराहतां N वराविहितं, S पूतिकं N °कां M2 Ba °काम् ; cf. MS.III.11.5:147 7.

12) mss. exc. S सर्वेभ्योपादानोपनिवयवनाद्.

13) mss. exc. P3 °वशिष्टोखा संभारैः.

14) N °घ्राप्य the oth. exc. P3 °घ्राय, N घर्मकपालेमगित्यर्मिकपाले M2 Ba घर्मेष्टकाधर्मकपाले S घर्मेष्टकाधर्मकपाले.

16) mss. exc. S °हुती°.

17) r. °न्त्र्युद्धीन्म°. cf.1.5.6.5; 6.1.2.6-8, mss. सर्वे.

19) M2 Ba रसेति N S त्वेति P3 रसा, as MS.IV.9.1:121.9 (r. there हरसा) (*Kn.* रस इति); for प्रतिष्ठापनम् P3 पिषिचन M2 चिशंचना the oth. पिशंचनो, r. with *Kn.* Vorwort विषञ्जनम् ? cf.6.1.2.12.

पनम् । १६ । अवशिष्टाया मृदो दोग्ध्रये उखे करोति शकटीप्रकारे ह्रसीयसीमन्यां वर्षीयसीमन्यामा' ज्यस्थालीं घर्मेष्टकां चत्वारि रौहिणकपालानि ' द्वे लक्षणवती । लेखनवेलायां लिखति । मार्जनवेलायां मार्जजति । २० । यदा निष्णाताः शोषणेन भवन्त्यथैनानुदीचो ऽङ्गारानुपोह्य '' वृष्ण इत्यश्वशकेन खरदेशे धूपयति । पूर्वो वा गर्तो व्याख्यातः । पचनं चोत्तरतो गार्हपत्यस्योत्तरतःपुरस्ताद्देवयजनस्य वा । २१ । अभ्रिभिः शलपरिचार्य्यं परिचित्याग्निमन्थेन पचेद्गार्हपत्याद्वार्चिष इत्यादीपनः । २२ ॥ अभीमां महिना दिवं '' मित्रस्य चर्षणीधृन इत्येताभ्यामुपचरति । यत्र क्वचोपचरेदेताभ्यामेवोपचरेत् । २३ । यदा निष्णानाः पचनेन भवन्त्यथैनानुदग्भस्मापोहति '' व्यर्धयामीत्यभिचरन्सँमर्धयामीत्यनभिचरन् । २४ ॥ देवस्त्वेत्युद्वासनम् । २५ ॥ सूर्यस्य त्वेत्यन्वीक्षणम् । २६ ॥ ऋजवे त्वेत्युच्छ्रयणम् । २७ ॥ इदमहममुमामुष्यायणमितिप्रभृतिभिरेकैकेन पर्यायेणैकैकं महावीरं दर्भैस्त्रिः परिमार्ष्टि । २८ ॥ छृणत्तु त्वा वागितिप्रभृतिभिरेकैकमजापयसाछृणत्ति । २९ । आसन्द्यां कृष्णाजिनमास्तीर्य '' देव पुरश्चरेति तस्यां महावीरान्सादयत्यपरमपरं पूर्वपूर्वं* वोत्तरमुत्तरँ वा ' तस्यां च परिघर्म्याणि । ३० । दर्भैः प्रछाद्य कृष्णाजिनेन च दीक्षितसंचरेणातिहृत्य दक्षिणत आहवनीयस्यासन्दीमुपकृष्य '' नमो वाच इत्योषधिपाणिर्मार्जयते । ३१ । महावीरेष्वेव मन्त्रप्रयोगः । ३२ । प्रजाकामो नेक्षेत प्रजाकामो नेक्षेत । ३३ । ॥१॥

पूर्वं उपसत्प्रयोगः । १ । स उपकल्पयते सौवर्णराजतौ रुक्मौ शातमानिकावुपदिष्टावौदुम्बरं दारुमयँ सप्त ममिधः । त्रयोदश वैकङ्कत्यो । बाहुमात्रा धवित्रदण्डास्त्रयो वैणवा'ग्राण्यनुदाल्य तेषु प्रादेशमात्राणि कृष्णाजिनपुटान्युपकर्षति । स्रुचौ ' द्वे ऽनुदुप्ते । परिग्राहावुपयामः सौमिक्यासन्दी ' मौञ्जो वेद सौमिको वा'हरणँ व्याख्यातम् । २ । उत्तरतो गार्हपत्यस्य सिकतानां खरं करोत्यु'त्तरतो ऽन्यमाहवनीयस्यो'त्तरतःपुरस्ताद्बहिर्धिनिर्णेजनीयम् । ३ । संप्रसार्य द्वाराणि प्रचरति परिश्रयणावृना । ४ । विहारं परिस्तीर्य दक्षिणतो ब्रह्मयजमानाभ्यां पत्न्या उद्गात्रे च पश्चाद्धोत्रे त्रिधातूपस्तृ-

---

20) mss. exc. P3 मृदि, दोग्ध्री गौर्व्यां; mss. शकटि°, रोहिण°; P3 °णवति the oth. °णवते.

21) S °श्वशपेन N °श्वशफेन; N S धूपयत्पूर्वे M2 Ba °यत्युर्वे P3 °यंति; N S गर्तौ.

22) M2 Ba शलपरियायं N S शर्परिवायं P3 सलपरिच्चार्य्ये; mss. °दीपनो (*Kn.* °दीपनम्).

23) (MS IV.9.1:121.14 is no verse, cf.3:123.8; 1.121.15 r. as in the text, 121.16 is the third pada, r. श्रवसा पृ°.); P3 द्वाभ्यामु° the oth. इत्यभिद्वामु°, N S यत्रक्वंवो° M2 Ba यत्रकंवो°, cf. *Cal.* Āp.Śr.transl.15.4.5 note (*Kn.* यत्रक्वो°).

24) mss. नवंत्य°.

26) mss. °त्युन्वीच्च° P3 अवेक्षते.

29) P3 छ्रणक्तु त्वा N S श्रृणत्तित्युक्त्वा M2 पृछ्रणक्तुकत्वा Ba छृणक्तुकृत्वा.

30) MS IV.9.1:122.6 r. देव पुरश्चर समृ°); N S P3 पारिध° (thus *Kn.*) cf.4.2.6; 3.39, 4.5, 15.

31) P3 °संचारे° the oth. °संभारे°; mss. इत्यौषधी° (S °धि°).

2 Cf. MS.IV.9.2-6; Āp Śr.15.5-8).

2) mss. राजतो; *Kn.* वैणवा वा; M2 Ba स्रुचो N S स्रचौ; Ba नुदृप्ते M2 नुदसे, N S नदप्ते, cf. su.6, 32; 4.3.33; mss. परिग्रामामु° (Āp. शफौ Kāty. परीशासौ Baudh. संदंश); mss. °पयामँ मोमेस्यासंदी, सौमिक्याबाह° (N S °ब्याह°).

णाति । ५ । अग्रेण गार्हपत्यं बहिर्वेदि पात्रेभ्यः संस्तीर्य पात्राणि प्रयुनक्ति स्रुवं ज्येष्ठं महावीरं परिग्राहावुपयामं धवित्राणि निदाने दोग्ध्र्यौ मेथीमभिधानीमाज्यस्थालीमपराणि च परिघर्म्याणि स्रुक्कपाले ऽनुदुप्ते रुक्मौ वेदप्रलवान्वेदं समिधः । ६ । वेदप्रलवाणां पवित्रे कुरुते ' दर्भपवित्रे इति । ७ । अग्रेण गार्हपत्यमन्तर्वेदि प्रोक्षणीनामावृता प्रोक्षणीः संस्कृत्य पश्चाद्गार्हपत्यस्य " गायत्रीं छन्द इति प्रपद्यन्त ऋत्विजो यजमानश्च । ८ । उपोत्थायोच्चैः प्रवर्ग्येण प्रचरन्ति । ९ ॥ ब्रह्मन्प्रचरिष्यामो " होतर्घर्ममभिष्टुह्युद्गातः सामानि गायेति प्रेष्यति । १० ॥ यजुर्युक्तमित्यनुज्ञातो ब्रह्मणा " देव पुरश्चरेति त्रिर्महावीरं प्रोक्ष्य पात्राणि प्रोक्षति ' समिधः खरौ च । ११ । वेदमन्तर्धाय सावित्रेण महावीरमादत्ते ' तूष्णीं स्रुवमाज्यस्थालीम् । १२ । पश्चाद्गार्हपत्यस्य तूष्णीमाज्यं संस्कृत्या ऽयुषे स्वाहेतिप्रभृतिभिः स्रुवेण गार्हपत्ये जुहोति । १३ । वेदेन महावीरं त्रिः परिमार्ष्टि ॥ यमाय त्वेति बुध्नं " मखाय त्वेति मध्यं " सूर्यस्य हरसे त्वेत्यग्रम् । १४ ॥ देवस्त्वा सवितेति महावीरे सर्पिरानयति । १५ ॥ पृथिव्या इति राजतं रुक्ममधस्तात्खरस्योपकर्षति । १६ ॥ अर्चिषे त्वेतिप्रभृतिभिर्विष्वगग्रान्वेदप्रलवानादीप्या ऽर्चिरसीति तैर्महावीरमुपज्वालयति । १७ ॥ सूर्यस्य तपस्तप इति तान्खरे सादयति । १८ ॥ अञ्जन्तीत्यश्वत्वा " संसीदस्वेति तेषु महावीरं प्रतिष्ठापयति । १९ ॥ अनाधृष्टेतिप्रभृतिभिः प्रादेशेनाध्यधि प्रतिदिशं प्रदक्षिणं महावीरं सर्वतो व्युद्दिशति ॥ मनोरिनि दक्षिणतःप्राचीनं भूम्याम् । २० ॥ चिदसीति गार्हपत्यादङ्गारानभ्यूहति । २१ ॥ स्वाहा मरुद्भ्य इति सर्वतः परिश्रयति । [तूष्णीं रुक्ममपिदधाति] । २२ ॥ मासीतिप्रभृतिभिर्द्वादशभिर्वैकङ्कतीभिर्द्वाभ्यांद्वाभ्यां शलपरिचाय्यं परिचित्य त्रयोदश्यां रुक्मं प्रतिमुच्य महावीरं सर्पिषः पूरयित्वा ऽन्तरिक्षस्यान्तर्धिरसीति तया महावीरमपिदधाति । २३ ॥ अहंन्बिभर्षीत्युपतिष्ठन्त ऋत्विजो यजमानश्च । २४ ॥ गायत्रमसीत्येतैर्धवित्राण्यादत्ते । २५ । तैर्महावीरमुपवीजयति " मध्विति त्रिरवाचीनं " जिन्वेति त्रिरूर्ध्वमपि वा " जिन्वेति त्रिरवाचीनं " मध्विति त्रिरूर्ध्वम् । २६ । तेषां त्रैष्टुभजागते प्रतिप्रस्थात्रे प्रयच्छ-

6) mss. exc. P3 परिग्राहानु° cf. sū 2; P3 दोग्ध्रीयौ the oth. दोग्ध्री, cf.4.1.20; 3.1,13,15,29; mss. exc. P3 परिघ° (*Kn.* पारिघ°); P3 °वेदं N S °खोदिं Ba °खारिं M2 स्वारिं.

7) mss. °पविश्रेत्य°.

8) mss. °वृताः (°ताः).

9) P3 °था । उच्चैः S °योस्थितैः the oth. °योस्थितैः; mss. exc. P3 चरंति.

10) P3 साम, cf. Kāty.Śr.26.2.11.

11) cf.4.1.30; mss. exc. N S खरो.

12) P3 भवेदांतर्धानं कृत्वा the oth. वेदांतर्धं; M2 Ba स्रुवंमा° N S स्रुज्यमा°.

13) cf. MS.III.12.9:163.7.

14) P3 रसे (thus *Kn.*), missing in the oth., cf. MS.IV.9.3: 123.7.

16) mss. exc. P3 °पकर्षस्व°.

17) P3 विश्वगर्मा° S °विश्वगग्रा° M2 Ba °मूलाग्रा° N °मूलानूग्रा°.

18) mss. exc. P3 त्वेति inst. of तपस्तप इति, cf. sū.14.

19) N S °श्युत्वा M2 Ba °श्वजं.

20) mss. exc. P3 विदिशति; P3 भूम्यां प्रादेशं करोति.

22) mss. exc. P3 मरुद्भिरिति, as Kāty.Śr.26.3.9. [ ] not N S P3.

23) mss. °चायं, not P3; N S °र्धीरसीति.

24) P3 अहंबिभर्षि S N °हंन्निष्कमित्यु° M2 Ba °हंन्निष्कंयजत्यु° cf.MS.IV. 9.4:124.10.

26) P3 °पजीश्यति the oth. °पविजयति, cf.1.3.1.4.

ति ' प्रतिप्रस्थाता जागतमाग्नीध्राय । २७ ।। परि त्वा गिर्वणो गिर इति श्रुत्वा " प्राणो ऽसीत्यध्वर्युप्रथमा धून्वन्तः प्रदक्षिणं महावीरं त्रिः परियन्ति । वैकल्पिकश्चतुर्थ ।। आयुष्ट इति यजमानः । २८ ।। शुक्रं त इति श्रुत्वा समिधमग्नौ प्रहृत्य रुक्मं पात्र्यां निदधाति । २९ । अत ऊर्ध्वमध्वर्युः प्रणवे प्रणव आज्येन घर्मं रोचयते । ३० ।। सम्यक्सम्यञ्च इति श्रुत्वा सर्वे धून्वन्त आ पवित्रवत्याः । ३१ । एतस्मिन्काले प्रतिप्रस्थाता पिष्टानां रौहिणौ निर्वपति । तूष्णीं पुरोडाशौ कृत्वा संस्कृत्य " ग्रावाणेति श्रुत्वानुदुप्तयोरासादयति । ३२ ।। ईळे द्यावापृथिवी इति श्रुत्वोत्तरेण महावीरं गत्वा हविष्पथेन दक्षिणं परिधिसंधिं प्रत्यवस्थापयत्यु'त्तरमन्यम् । ३३ ।। याभिः कृशानुमिति श्रुत्वाग्नीध्रप्रथमा धून्वन्तः प्रसव्यं महावीरं त्रिः परियन्ति । ३४ ।। अप्नस्वतीमिति श्रुत्वा " रुचितो धर्म इति प्रेष्यति । ३५ ।। दश प्राचीरिति सर्वत उपतिष्ठन्त ऋत्विजो यजमानश्च । ३६ ।। त्वष्टिमन्तस्त्वेति यजमानः पत्न्या सहावेक्षते । ३७ । ।।२।।

सावित्रेण निदाने आदत्ते ' तूष्णीं दोग्ध्रीं मेथीम् । १ । अभिधानीमादाये"डा एहीति त्रिरहन्यहन्युपांश्वाह्वयति । २ । पूर्वया द्वारा निःसृत्या"सावित्ति त्रिरुच्चै"र्यस्ते स्तन इत्याह्वयति । ३ । उत्तरतः पृष्ठ्यादेशस्य मेथीं निहत्य तस्यां निबध्नाति । ४ ।। अदित्या उष्णीषमसीत्यभिनिदधानः । ५ ।। पूषा त्वेत्युपसर्जने । ६ ।। वायुरसीत्याव्रजतः । ७ ।। घर्माय त्वेत्युच्छ्रैषणे । ८ ।। अदित्या रास्नासीति निदीयमाने । ९ ।। बृहस्पतिष्ट्वोपसीदत्वित्युपसीदति । १० ।। दानवः स्थ पेरवः स्थेति स्तनान्संमृशति । ११ ।। अश्विभ्यामिति दोहने । १२ । एतस्मिन्काले प्रतिप्रस्थाता तूष्णीं दोग्ध्रीमजां पिन्वति । १३ ।। उत्तिष्ठेति श्रुत्वो"प मेहीत्याव्रजतः । १४ ।। आ घर्मे सिञ्चस्वेति श्रुत्वा " मधु हविरसीति दोग्ध्र्या महावीर आनयति । १५ । एतेन धर्मेण व्यत्यासं त्रिरध्वर्युस्त्रिः प्रतिप्रस्थाता । १६ । तूष्णीं प्रतिप्रस्थाताध्वर्युपात्रे सर्वमानीय शेषमाधाय " गायत्रो ऽसीति परिग्राहावादत्ते ।। जागतो ऽसीत्युपयामम् । १७ ।। द्यावापृथिवीभ्यां त्वा परिगृह्णामीति परिगृह्या"न्तरिक्षेणोपयच्छामीत्युपयामे नियच्छति । १८ ।। देवानामिति धारयमाणो जपति । १९ ।।

---

28) mss. exc. P3 पर्यंति; N S ॰तुर्थष्ट इति M2 Ba तुर्येष्ट इति; P3: अपानो ऽसि द्वितीयं । व्यानो ऽसि तृतीयं । श्रोत्रमसि चतुर्थं । विकल्पेन आयुष्टेभरामे । नैनरुपमर्तद्विते । इति यजमानः.

29) M2 Ba ॰भिदधाति; cf. MS.IV. 10.3:150 4.

31) cf. R̥V.9.73.2; 83.1.

32) mss. ॰यतस्मि॰; M2 Ba ॰नुष्णयो॰ N S ॰नुप्तयो॰; cf R̥V.2.39.1.

32-33) N S सांदयताळे M2 Ba मादयनामीलं, cf R̥V.1.112.1.

33) mss. ॰न्यत्.

34) mss exc. P3 मव्यं, mss. पर्यंति, cf. R̥V.1.112.21.

35) M2 Ba ॰प्रस्वतीति N S ॰प्रस्यतीति.

37) N S पत्यामाक्षते M2 Ba प्रपत्न्यामावेक्षते.

**3** Cf. MS.IV 9.7-9,27; Āp.Śr. 15.6, 9-12, 16.

1) N S मेथीम॰ M2 Ba मेथ्रीम॰.

2) M2 Ba त्रिरंहन्य उदुन्युदुपाँस्वा॰ N S त्रिरंहन्य उहुन्यद्पाँस्वा॰. cf. सu 49.

3) mss. exc. P3 ॰निसृत्या॰.

4) M2 Ba मेथ्यं N S मेष्ठ्यं.

6) mss. त्वेतिसर्जने.

7) P3 आव्रजनं.

8) mss. ॰छैषणे, P3 घर्माय शत्व, cf. MS IV.9.7:127.9.

11) *Kn.* प्रेरवः cf. Āp.15.9.8; M2 Ba स्तनान्मं॰ N S सतान्सं॰.

15) P3 ॰वीरत्वान॰ the oth. वीरं आन॰, cf. सu.29.

18) M2 Ba ॰पयस्थोसीत्यु॰ N S ॰पस्थामीत्यु॰.

दिविस्पृगिति यथालोकं नियच्छति । २० ।। तेजो ऽसीति सप्तदश प्रेङ्खणे । २१ ।। दिवि धा इत्युपोत्थाय " देवँ सवितारमित्यभिप्रव्रज्य " नाके सुपर्णमिति श्रुत्वा " विश्वा आशा इति दक्षिणातिक्रामति । २२ ।। विश्वान्देवानयाडिहेति यजमानँ वाचयति । २३ । स्थानं गत्वाश्रावयति । २४ । प्रत्याश्रुते " घर्मस्य यजेति प्रेष्यति । २५ ।। अश्विना घर्ममिति निगद्य वषट्कृते न सर्वं जुहोति ।। स्वाहेन्द्राय वषडित्यनुवषट्कृते । २६ । एतस्मिन्काले प्रतिप्रस्थाताऽहः केतुनेति रौहिणौ जुहोति पुरस्तादन्यँ वषट्कारस्य पुरस्तादन्यमनुवषट्कारस्य । २७ ।। स्वाहाकृतस्य घर्मस्येति यजमानँ वाचयति । २८ ।। इष इति प्रतिप्रस्थाता दोग्ध्या महावीर आनयति । २९ ।। त्विषे त्वा द्युम्नाय त्वेन्द्रियाय त्वा भूत्यै त्वा स्वाहेति प्रतिदिशँ सर्वतो व्युत्तारयति । ३० ।। घर्मो ऽसीत्युपयामे शेषमानीयाऽमुष्मै त्वेति महावीरं खरे सादयति । यं द्विष्यात्तस्य नाम गृह्णीयात्तूष्णीमनभिचरन् । ३१ । उपयामे ऽञ्जन्समिध आदधाति " पूष्ण इति पञ्चभिः । ३२ । षष्ठीमुपयामे ऽनुदुप्तयोः परिग्राहयोर्महावीरे ऽक्ताँ " रुद्राय रुद्रहोत्रे स्वाहेत्युत्तरपूर्वस्यां दिशि प्रविध्याय उपस्पृश्यानक्तामादायाऽपीपरो माह्न इति समिधमादधाति । ३३ ।। हुतँ हविरिति प्रातरग्निहोत्रधर्मेण जुहोति । ३४ ।। अश्याम ते देव घर्मेति समुपहूय भक्षयन्त्यृत्विजो यजमानश्च । प्राणभक्षेणादीक्षिता भक्षयन्ति । ३५ । उपयाममधिनिर्णेजनीये प्रक्षाल्य निनयनप्रभृति सिद्धमा भक्षणात् । ३६ ।। आयुर्दा इति रुक्मवतीभिरन्तर्वेदि मार्जयन्ते । ३७ । परिग्राहाभ्यां महावीरमादाय " सँसाद्यमानायानुब्रूहीत्यनुवाचयति । ३८ । अपरमपरं पूर्वंपूर्वँ वोत्तरमुत्तरँ वा तस्यां च परिघर्म्याणि ।। स्वाहा त्वा सूर्यस्य रश्मिभ्य इति दर्भैः प्रच्छाद्य कृष्णाजिनेन च दीक्षितसंचरेणातिहृत्य दक्षिणत आहवनीयास्यासन्दीमुपकृष्य " नमो वाच इत्योषधिपाणयो ऽधिनिर्णेजनीये मार्जयन्ते । ३९ ।। इडायास्पदमसीति प्रादेशैः प्रत्यक्रमव्यैर्लोष्टान्युपास्यन्ति । ४० । अप उपस्पृश्य " पृथिवी शान्तिरित्यभ्युक्ष्योद्वयं तमसस्परीत्यादित्यमवेक्षते । ४१ ।। मित्रस्येति प्रेक्षमाण-

21) N S प्रेंखाना M2 Ba प्रग्वना P3 प्रेंष इति; cf. MS.IV.9.7, 8 128. 5-13.

22) mss. exc. P3 °निप्रव्रज्य. cf. MS. I.2.18:27.11, RV.10.123.6.

24) N S गत्वा श्रावपति.

26) N S देवेभ्य इति inst. of अश्वि° धर्म°, *Kn.* वषट्कृतेन, thus also 4.5.6.

27) M2 Ba केतुरिति N S केदिति; M2 Ba S °दत्य N °दंत्य; mss. °दंत्यम°; cf. sū.44, Śat Br.14. 2.1.1, 2.

29) M2 Ba इषेति N S °नीपि इति; M2 Ba °वीरं आन° N S वीरमान°.

30) N S only त्विश्येति.

31) mss. °भिचरमनय°.

32) mss °धामेंजत्म°.

33) mss. ऽनदृप्तयोः, परिग्रह°; mss. exc. S °हावीरो; mss. क्ता, उपस्पृष्ट्वा°.

34) cf. sū.47.

36) mss. exc. P3 °धिनिनीयनीये, cf. sū.39, 4.2.3.

38) mss. परिग्रहा°; mss. exc. P3 °दार्यां.

39) *Kn.* पारि°, mss. परि°; mss. exc. P3 रश्मिभिरिति, cf. sū.48; 4.2 22; mss. °तिरिति instead of °तिहृत्य; mss. exc. P3 इत्यौपधिपाणिन्यधि [ M2 Ba न्यादि] निर्णे°.

40) M2 Ba इडायास्त्यादेवयमिति, cf. MS I.6.2·87 8; *Kn.* °पास्यति.

41) mss. exc. P3 पृथिवीमंतेरिति; mss. °तिमभ्युदय [N S च] मद्दयं.

42) S N °चर्याः M2 Ba प्रेक्षणसमीक्षणौ.

समीक्षणे । ४२ ॥ ब्रह्मण उपस्तरणमसीति मार्जनान्यवसृज्य वामदेव्यं जपित्वा पञ्चैन्द्रीं जपित्वा " स्वस्ति न इन्द्रो वृद्धश्रवा [जपित्वा] " आपो हि ष्ठेति शान्तिकर्मण आन्तादनुवाकस्य । ४३ । एतेन धर्मेणापराह्णिको व्याख्यातो ऽन्ययोः कपालयो रौहिणयोः । ४४ ॥ रात्रिरिति रौहिणस्तोमः । ४५ ॥ अपीपरो मा राज्या इति समिधमादधाति । ४६ ॥ हुतँ हविरिति सायमग्निहोत्रधर्मेण जुहोति । ४७ ॥ स्वाहा त्वा नक्षत्रेभ्य इति प्रच्छाद्य " शं नो वात इत्यभ्यस्तमिते होमः । ४८ । एतेन धर्मेण त्रिरुपसत्को व्याख्यातो । ऽहन्यहन्येकैको महावीरो भवति । ४९ । एतेन धर्मेण षडुपसत्को व्याख्यातो । द्व्यहंद्व्यहमेकैको महावीरो भवति । ५० । एतेन धर्मेण द्वादशोपसत्को व्याख्यातश्चतुरहंचतुरहमेकैको महावीरो भवति महावीरो भवति । ५१ ॥ ॥३॥

अथात उत्सादनम् । १ । उपयामं दधिघर्माय निदधाति । २ । खरावन्तरीकृत्य सँवपत्ययुतं बर्हिरधिनिर्णेजनीयम् । ३ । संप्रैषः सकृदुत्तरेण वेदीमाहरत्यृत्विजां गत्या । ४ । अग्रेणाहवनीयमासन्दीमवस्थाप्य तस्यां महावीरान्निदधात्यपरमपरं पूर्वपूर्वं वोत्तरमुत्तरँ वा तस्यां च परिघर्म्याणि । ५ । पश्चादाहवनीयस्य " गायत्रीं छन्द इति प्रपद्यन्त ऋत्विजो यजमानश्च । ६ ॥ पशूनां ज्योतिरसीति महावीरे सर्पिरानयत्युत्तराभ्यां मधुदधीतरयोः । ७ । आज्यँ सँस्कृत्य दर्भकूर्चानादीप्यास्यदघ्ने धारयमाणो " घर्म या ते दिवि शुगिति जुहोत्युत्तराभ्यां नाभिदघ्नजानुदघ्नयोः । ८ ॥ अन्वद्य न इत्युपविशति । ९ ॥ पूष्ण इति पञ्चाहुतीर्जुहोत्युत्तराभ्यां प्रतिदिशं प्रत्येति । १० । उपोत्थायोद्गातः साम गायेति प्रेष्यति " प्रस्तोतरिति वा । तस्य सर्वे निधनमुपयन्ति । ११ । अन्वद्य नो अनुमतिरन्विदनुमत इति सर्वे जपन्ति । १२ ॥ ब्रह्मणस्त्वा परस्पाया इत्यनुनिष्क्रामति ॥ प्राणस्य त्वेति समयार्धे द्वितीयं ॥ दिवस्त्वेति प्राप्य तृतीयम् । १३ ॥ अप द्वेष इति चात्वाले ऽधिनिर्णेजनीयं प्रतिष्ठाप्याप उपस्पृश्योत्तरत उत्त-

43) mss. exc. P3 वामदेवं; N पंचैंद्रां Ba पंचेंद्रां M2 पचेद्रा S पंचेंद्रा; [ ] only P3; mss. exc P3 °कर्मणा.

44) mss. °ह्णिक्यौ; *Kn.* कपलयो.

45) S °स्तोमा° the oth. °स्तौमा°; cf. sū.27.

46) N S °पिपरो M2 Ba °पपिरो; cf. sū.33.

48) corr., M2 Ba प्रछादनोवैत N S शनोवैत.

49-51) mss. °पसक्तो three times.

50) द्व्यहं corr., M2 Ba ब्र्यहं N S यहं; N S °कैके.

51) mss चतुरहं चतुरिहमे°.

4 Cf. MS.IV.9.10-12, 17, Āp.Śr. 15.13-17.

1) mss. °दमन°.

2) P3 उपयाम दँधिघर्माय, *Kn.* उपयामं मध्ये घर्माय, cf 4.5.1.

3) P3 पृथक्; cf 4.2.3.

4) M2 Ba तेप्रैष N S तप्रैष; mss. वेद्यामा°.

5) P3 °निबघ्राति N S °न्निरवघ्रात्य° M2 Ba °न्निखध्राय°; cf sū.15; 4.1.30; M2 Ba P3 पारि° (thus *Kn.*).

7) mss. मधुदधिनितरा[र्य्ये], also possible : मधुदधिनी इत°.

8) P3 मंसत्य; mss. कूर्चारा°; corr. N S °त्तराज्यंभ्यां M2 Ba °त्तराज्य-भ्यान्नाभि°.

9) mss. exc. P3 रंत्वित्यु, cf. sū.12; mss. exc P3 °शंति.

10) P3: as sū.42, but see note translation.

12) cf. also MS.III 16.4:189.10-13.

13) mss. प्राणस्त्वेति.

14) mss. exc. P3 प्रतिविप, °स्पृष्ट्यो° (N S °ष्टवो°).

रवेदेः स्वयमातृण्णाया वा खरौ न्युप्य पुरुषाकृतिं विदधात्यादित्याकृतिं वा । १४ । व्युह्यावोक्ष्यावका-मास्तीर्य तस्यां व्याहृतिभिर्हिरण्यशकलेषु महावीरान्सादयत्यपरमपरं पूर्वंपूर्वं वोत्तरमुत्तरं वा । तस्यां च परिघर्म्याणि । १५ । दध्नः पात्राणि पूरयित्वाभितो निदधाति । १६ । वेदं प्रमुच्याभितः संस्तृणाति । १७ । दर्भैः प्रच्छाद्य कृष्णाजिनेन च " चतुःस्रक्तिरित्यासन्द्याभिविक्रमयति । १८ ॥ घर्मैतत्ते कृतमित्यु-पतिष्ठन्त ऋत्विजो यजमानश्च ॥ व्यसाविति च यं द्विष्यात्तस्य नाम गृह्णीयात्तूष्णीमनभिचरन् । १९ ॥ वल्गु-रिति परिषेचनं " समुद्रस्य त्वावकया " हिमस्य त्वा जरायुणेति च । २० ॥ पुनरूर्जा " सह रय्या निवर्त-स्वेत्युक्त्वावर्तते । २१ । एतस्मिन्काले यजमान उत्तरत उत्तरवेदेः प्राङ्मुख ऊर्ध्वस्तिष्ठन्सु"मित्रा न इत्यपो ऽञ्जलिना गृहीत्वा " दुर्मित्रा इति प्राचीर्बहिर्वेदि निरस्यति । २२ । त्रिरेष कल्पः परिषिच्यमाने । २३ । अप उपस्पृश्य " वार्षाहरं साम गायेति प्रेष्यति । २४ । परिषिक्त इष्टाहोत्रीयम् । २५ । परिषिक्ते " रन्तिर्नामासीति गन्धर्वनामभिः सर्वत उपतिष्ठन्त ऋत्विजो यजमानश्च । २६ ॥ एतत्त्वं देव घर्मेति यजमानः [जपति] । २७ ॥ इदमहमावर्त इत्युक्त्वावर्तते । २८ ॥ नमो देवेभ्य इति नमस्करोति । २९ ॥ पुनरूर्जा " सह रय्या निवर्तस्वेति प्रतिपर्यावर्तते । ३० । आज्यस्थालीं स्रुवं चादाय " श्यैतं साम गायेति प्रेष्यति । ३१ । आव्रजन्गायते । तस्य यजमानो निधनमुपैति । ३२ ॥ इदं विष्णुरिति पदलोभनः । ३३ ॥ त्वमग्ने गृहपतिरि-ति द्वाभ्यां गार्हपत्यमुपतिष्ठते । ३४ ॥ प्र तद्विष्णुरिति होम ॥ इममू षु त्वमस्माकमिति द्वितीयो । व्या-हृतिभिश्चत्वारः । ३५ ॥ वामदेव्यं साम गायेति प्रेष्यति । ३६ । आज्यस्थालीं स्रुवं च दध्नः पूरयित्वास-न्दीमुपकृष्य " नमो वाच इत्योषधिपाणयश्चात्वाले मार्जयन्ते । ३७ । यदि महावीर उपदस्येत्प्र वां दंसांसी-त्युपदस्त आप्याय्यमानः । ३८ । यदि महावीरो भिद्येत " मा नो घर्म ह्वरित इत्येताभ्यां प्रत्यृचमाहुती-र्जुहुयाद्व्याहृतिभिश्च । ३९ । व्याख्यातं करणम् । ४० ॥ घर्मः शिर इति यथाकालं घर्मेष्टकामुपदधाति

---

15) mss. exc. P3 न्युह्यावोध्यावमा°; *Kn*. पारि°, mss. परि°.

18) P3 °संद्याभिवि° N S °संद्यातिवि° M2 Ba °संदधानिवि° *Kn* °सन्द्या अधि वि°; cf 6.1.5 19.

19) r. probably ऽन्नमित्यु° as MS. IV.9.10:131.8; mss. exc. P3 व्यसायुषेति, cf.4 3.31.

20) mss. exc. P3 विष्णुरिति; N S परिषेचरं Ba परिषचरं M2 पचरं; cf. MS II.10.1.131.5-8.

22) cf. MS.I 2.18:28.10, *Kn*. प्राचीं.

23) mss. °षिंचमाने.

25) mss. °होत्राय (P3 इष्टागृहावीयं).

27) P3 एतत्तेऽयधर्म M2 Ba एतत्पचरि देवताधर्मेति N S एतत्यंचरिंदेवधर्मेतिः [ ] only P3.

28) P3 इदमहंपावर्ते not in the oth. mss., cf sū.21.

31) P3 शेतं N S स्यैतं M2 Ba मतँ.

32) mss. exc. P3 °व्रजंनोगायेते (M2 °गोपेते).

33) cf.1.2.5.23.

34) mss. exc. P3 गृहपते [°त] इति, cf. MS.II.13.8.157.5-8; R̥V. 7.16.5, 6.

35) चत्वारः P3 इदमग्नये भूर्भुवः etc. । इदं वायवे । इदं सूर्याय । इदं प्रजापतये.

37) P3 °संद्यामुपकृष्य the oth. पूरयित्वामुपकृष्य.

38) P3 लपदस्येतप्र the oth. उपदिश्यत्प; mss. पा inst. of वां; corr. N S आयमानो M2 Ba अयमानो, cf.3.6.20; R̥V.1.116 25.

39) N S भिपद्येत; mss. मानोधर्मेतिह्वरिव, P3 quotes गासोवतेः । हलिमातां, meaning MS.IV.9.12: 133.1-6; cf 2 5.4.24*d*.

40) cf 3.8 2.

41) mss. °ष्टका उप°, cf.4.1.20.

। ४१ ।। पूष्ण आघृणये स्वाहेति यथाकालं स्वयमेव पञ्चाहुतीर्जुहोति । ४२ ।। उग्रश्च भीमश्चेति यथाकालमरण्येऽनुवाक्यो गणो गणः । ४३ ।   ।।४।।

अथातो दधिघर्मेण चरन्ति । १ । माध्यंदिने सवने ग्रहान्संमृश्योपयामं दर्भैः प्रक्षाल्य पश्चादाग्नीध्रीयस्य " गायत्रीं छन्द इति प्रपद्यन्त ऋत्विजो यजमानश्च । २ ।। होतर्वदस्वेत्युक्त्वा " ज्योतिरसीत्युपयामे दध्यानीय " श्रातं हविः श्रातं देवेभ्य इति प्रेष्यति । ३ ।। यदि श्रातो जुहोतन यद्यश्रातो ममत्तनेति श्रुत्वा स्थानं गत्वाश्रावयति । ४ । प्रत्याश्रुते " दधिघर्मस्य यजेति प्रेष्यति । ५ ।। यमिन्द्रमिति प्रतिनिगद्य वषट्कृते न सर्वं जुहोति।। ताभ्यां स्वाहा वषडित्यनुवषट्कृते । ६ । उपयामे भक्षं हरति । ७ । सदो गत्वोप-हूतापह्वयस्वेत्युक्त्वोपहूता उपह्वयध्वमिति वा । ८ ।। भूर्भुवः स्वर्मयि त्यदिति भक्षयन्ति । ९ । घर्ममुपयामं मार्जालीये दर्भैः प्रक्षाल्य दध्ना पूरयित्वोदस्य शुष्मादित्याहवनीय आदधाति । १० । उत्तमे ऽहन्यहर्गणाः । ११ ।। नमो वाच इत्योषधिपाणयश्चात्वालान्ते मार्जयन्ते । १२ ।   ।।५।।

अथासुरिगव्यः । १ ।। विज्रे विक्षिपे विधम इति तिस्रो " विज्र एहीत्यष्टौ । २ । यं द्विष्यात्तस्य गवां मध्ये " विज्रे विक्षिपे विधम इत्याहूय प्रागुदयान्निष्क्रम्य दक्षिणतो ग्रामस्य पश्चाद्वा शुचौ देशे स्वकृत इरिणे ऽग्निं प्रज्वाल्य कृष्णायाः कृष्णानां व्रीहीणां पयसि स्थालीपाकं श्रपयित्वा । तस्मिन्नुपसमाधाय परिसमुह्य पर्युक्ष्य शरैः परिस्तीर्याॅसृङ्मुख इति स्थालीपाकस्य हुत्वा । प्राक्स्विष्टकृतः शरभृष्टिना दक्षिणस्योरोर्देशस्य सव्यमस्याङ्गे दक्षिणा निःकास्य स्थलम् । ३ । वृक्षमारुह्य ग्रामं नगरं जनपदं वा यं द्विष्यात्तं " ध्रुवोरित्यवेक्षेत ' स सद्यो विनश्यति । ४ ।। उद्वयं तमसस्परीत्यादित्यमवेक्षते । ५ । प्रत्येत्य " नमो वाच इत्योषधिपाणिर्मार्जयते मार्जयते । ६ ।   ।।६।।

अवान्तरदीक्षामुपैष्यन्नुदगयने ज्यौत्स्ने पुण्ये नक्षत्रे ऽन्यत्र नवम्याः प्रागस्तमयान्निष्क्रम्योत्तरतो ग्रामस्य पुरस्ताद्वा शुचौ देशे ऽहतेन वाससा परिणद्धः सर्वरात्रं तिष्ठेत्स्त्रीशूद्रमनभिभाषमाणः । १ ।

---

42) mss. वृष्ण [M2 ष्णा] आपृ [S वृ]-णये corr. from sū.10; mss. °काले.

43) mss. °रण्योनु°.

5 Cf. MS.IV.9.13, 14; Āp Śr.13. 3.2—4.5.

1) cf. 2 4.4.20.

3) cf. also Āśv.Śr.5.13.4,5; Śāṅkh.Śr.7.16.2, 3.

4) P3 मगवत् इति the oth. ममुत्तर इति.

6) *Kn.* वषट्कृतेन; P3 ताभ्यः M2 Ba त्यन्याँ S त्यन्धां N त्यन्या, cf.4.3. 26.

7) mss. exc. P3 उपयमनभक्षँ.

9) P3 त्वद् the oth. तादिति, corr. as TĀ.4.21.

10) mss. exc. P3 °त्याँश्राहव°; P3 निदधाति.

11) M2 Ba °र्गणान्न [मो].

6 Cf. MS.IV.9.17,19.

1) r. °सुर° ?

2) 1. S वज्रे M2 B2 विज्रो; 2. M2 विज्रो N S विज्रे; M2 Ba पही°.

3) mss. °स्रुङ्मुख; *Kn.* दक्षिणानि काँस्यस्थलम्.

7 Cf. MS.IV.9.23-26; Āp.Śr.15. 20, 21.

1) mss. °पैश्यन्नु°, ज्योत्स्ने, °भाष्य°.

श्वोभूते ऽग्निँ सूर्यँ गाँ हिरण्यं ब्राह्मणमुदकाँस्यं च कन्यां पतिकामामिति निदर्शयेत् । २ । तत्रैवाग्निमुपसमाधाय चैत्यस्याश्वत्थस्यार्द्राश्चतस्रः समिधः स्तिभिगवतीः सहपलाशाः प्रादेशमात्रीः सर्पिषि पर्यस्ताः " पृथिवी समिदिति स्वाहाकारान्ताभिरादधाति । ३ ।। अग्ने व्रतपत इति व्रतं प्रदायादितः पञ्चविँशतिमनुवाकाननुवाचयेत् । ४ । परिणहनं गां काँस्यं च गुरवे दद्यात् । ५ । न नक्तं भुञ्जीत । यदि भुञ्जीतापज्वलितं भुञ्जीत । ६ । अहस्तिष्ठेद्रात्रावासीनः । पर्वसु चैवँ स्यात् । ७ । एवँयुक्तः सँवत्सरं चरेत्त्रीन् पञ्च सप्त वा । त्रैविद्यकं च चरेत् । ८ । समाप्ते च तान्युत्सृज्य " नमो वाच इत्योषधिपाणिर्मार्जयते मार्जयते । ९ । ।।७।।

आरण्यँ स्वाध्यायमध्येष्यमाण उदगयने ज्यौत्स्ने ' शुक्रियं पूर्वाह्णे ' न नक्तं ' न भुक्त्वा ' न यामे ' न शोणितं दृष्ट्वामँ वा माँसमन्यद्वामेध्यं पर्वसु च प्रतिषिद्धम् । १ । प्रागस्तमयाद्धविष्यमन्नमुपयुञ्जानः । २ । प्रागुदयान्निष्क्रम्योत्तरतो ग्रामस्य पुरस्ताद्वा शुचौ देशे विष्टरपाणयो ऽभिमुखास्तंदनुचक्षुषो यथाकालँ स्वाध्यायमधीत्य " नमो वाच इत्योषधिपाणयो मार्जयन्ते । ३ । सर्वत्र रहस्यमन्त्रप्रयोगे प्रतिपत्तिर्मार्जनं च प्रतिपत्तिर्मार्जनं च । ४ । ।।८।।

**।। इति मानवसूत्रे प्रवर्ग्यकल्पः समाप्तः ।।**

---

3) corr. M2 Ba स्तित्रिगवती: N S स्त्रिभिर्गव्यूती:; mss. सर्पिर्विप [M2 Ba र्पि] र्य°.

4) N S ° विँशति मनु° M2 Ba विँशत्यनु°, cf.3.8.3.

6) M2 Ba भुंजीतास्यादेवँप्रज्वलितं.

7-8) M2 Ba चैनैँयुक्तसैँसंवत्सरं; च from Nc on Mān.Gṛ.1.23.24, M2 Ba त्र, not N S.

9) S तान्युज्य the oth. तात्युत्सज्य.

8 Cf. Āp.Śr.15.21.

1) mss. ज्योत्स्ने; M2 Ba ग्रामेण for यामे न.

इष्टिभिर्यजेत पौर्णमास्याममावास्यायां वा पूर्वपक्षे वा पुण्ये नक्षत्रे ऽन्यत्र नवम्याः । १ । प्रायश्चि-त्तेष्टिरापत्काला । सद्यः कुर्यात् । २ । तूष्णीमग्निष्वन्वाधाय व्रतमुपैत्यन्यत्र नियतकालाभ्यः समृतयज्ञाश्च । ३ । आहवनीयोत्करावन्तरा तीर्थं ' चात्वालोत्करावन्तरा सचात्वालासु । ४ । सप्तदश सामिधेन्यः । ५ ॥ पृथुपाजा"स्तैं सबाध इति पृथुपाजवत्यौ धाय्ये । समिद्वत्यावन्तरा धाय्यास्थानम् । ६ । आज्यभागस्विष्टकृ-तावन्तरेज्यानामावापः । ७ । निगदमावाहन उत्तमे प्रयाजे स्विष्टकृति सूक्तवाके च । ८ । अव्यवहिताः समानदेवताः सकृदावपे'त्प्रतीच्यँ व्यवहिताः । ९ । वाजिनं नावाहयति । १० । पशुपुरोडाशँ यानि चा-न्वायतन्ते त्रिमात्राणि भवति ॥ ये३ यजामह आदिरे"ह्या"वहेति चो" श्रावयेत्यादितो द्वे ' ब्रूहिप्रेष्यश्रौष-ड्वौषट्सूपोत्तमँ ' याज्यान्तश्च । तस्मिन्सध्यक्षराण्यप्रगृह्याणि विवेकेन प्लवन्ते । ११ । शस्त्रानुवचनयोरुत्तम-मक्षरँ स्वराद्योकारी भवति । १२ । ऋक्समवाये त्रिः प्रथमोत्तमे । १३ । प्रणवेनर्चः संदधाति । १४ । अग्न्या-धेयेष्टिष्वारम्भणीयानुनिर्वाप्या । १५ । अनीकवतसांतपनक्रीडिनेषु पञ्चदश सामिधेन्यः । १६ । राजन्यात्रि-वध्र्यश्ववसिष्ठवैश्यशुनकानां कण्वकश्यपसंकृतीनां नराशँसो द्वितीयः प्रयाजस्त'नूनपादन्येषामु'भौ यत्र समाम्नातौ । १७ । यस्यै देवतायै वषट्कुर्यात्तां मनसा ध्यायेत् । १८ । आग्नेयेनाष्टाकपालेन स्वर्गकामो यजेत पौर्णमासतन्त्रेण । १९ ॥ अग्निर्वृत्राणि जङ्घनँत्त्वँ सोमासि सत्पतिरिति वार्त्रघ्नावाज्यभागौ । २० ॥ अग्निर्मूर्धा " भुवो यज्ञस्येति हविषः । २१ ॥ पिप्रीहि देवानँग्ने यदद्येति स्विष्टकृतः सँयाज्ये । २२ । पौर्णमास-तन्त्रमनादेशे । २३ । कपाले नष्टे प्रयुक्तानां प्रागुद्वासनादग्नये वैश्वानराय द्वादशकपालं निर्वपेत् । २४ । भा-र्गवो होता । २५ । एकहायनो गौर्दक्षिणा । २६ । प्रायश्चित्तिः कल्पः । २७ ॥ अग्ने रक्षा णस्'त्वं नः सोमेति रक्षितवन्तावाज्यभागौ । २८ ॥ वैश्वानरो न ऊत्या " पृष्टो दिवीति हविषः । २९ ॥ विश्वानि नो "ऽग्ने त्वं पारयेति पारयद्वत्यौ सँयाज्ये । ३० । सर्वास्वारम्भणीयासु पौर्णमासतन्त्रम् । ३१ । अग्न्याधेये त्रिहविरारम्भ-णीया चतुर्हविर्वा । ३२ ॥ अग्नाविष्णू सजोषसेति षट्त्रिहविषः । ३३ ॥ त्वमग्ने वीरवँत्त्वं भगो न इत्याग्नावैष्ण-वादनन्तरे चतुर्हविषः । ३४ । यदि काम्यो भगी नानातन्त्रः । ३५ । वैराजः कल्पः । ३६ ॥ अग्निः प्रत्नेन

1 Cf. MS.IV.10.1; Āp.Śr.19.18.

3) M2 संमृत° N संभृत°. cf.3.7.4; 5.2.14.24; 9.5.1.

4) cf.8.26.

5) M2 Ba सत्यपद.

8) mss. exc. N निमदमा°; M2 Ba °वाहनेमु° S °वाहनामु° N °वाहममु°.

9) प्रतीच्यं adv. : apart, cf. Nigh. 3.25.

11) M2 Ba °न्वायंते; श्रो श्रावय cf. 1.3.1.24; mss. exc. N S °पोत्तम; S प्लवंतो M2 Ba भवंतो.

12) mss. exc. N शस्त्रानुपुरोनुवाक्या-चनयोरु°.

15) N °धेयेष्वा° S °धेयेष्ट्य°° M2 Ba °धेयेर्ष्य°, cf. 5.1.2.1.

16) mss. °क्रीडनीषु; cf.1.7.5; 5.1.4. 1, 7.

17) mss. °शूनकानां.

19) *Kn.* पौर्णमासतन्त्रेण in sū 20.

22) N संयाजे (thus often).

26) cf. MS.II.1.2:2.15.

27) this sū. often, also as °त्तिक°.

30) N पारपद्वयौ the oth. पारद्वयौ.

32) M2 Ba चतुर्हविषा.

35) N नानाभगीतंत्रौ; cf. Āp.Śr.5.23. 6, 8.

मन्मना " सोम गीर्भिष्ट्वा वयमिति वृधन्वन्तावाज्यभागौ । ३७ । आम्नाते हविषः । ३८ ।। प्रेद्धो अग्न इति विराजौ सँयाज्ये । ३९ । ।।१।।

अग्न्याधेयेष्टीनां पवमानस्याग्न आयूँषि पवस इति द्वे हविष ' उत्तरे स्विष्टकृतः । १ ।। अग्ने पावक रोचिषेत्युत्तरयोश्चतस्र ' उत्तरे स्विष्टकृतः । २ । चतुर्हविषो वैराजः कल्पः । ३ । आग्नावैष्णवस्याम्नाते । ४ ।। किमित्ते विष्ण इति षडुत्तरेषाम् । ५ । पुनराधेये प्रयाजानुयाजानां पुरस्ताद्वोपरिष्टाद्वा विभक्तीः कुर्याद्ये३ यजामहे " समिधः समिधो ऽग्ना आज्यस्य व्यन्त्वग्निरग्निस्तनूनपादग्ना आज्यस्य वेत्वग्निमग्निमिडो ऽग्ना आज्यस्य व्यन्त्वँग्नेरग्नेर्बँर्हिरग्ना आज्यस्य वेत्वँग्नेरग्नेरिति । यथाम्नात उत्तमः । ६ ।। अग्निँ स्तोमेन बोधयेति षडाज्यभागहविःस्विष्टकृताम् । ७ । आग्नेयावाज्यभागावँग्निर्मूर्धेति प्रजाकामस्य पशुकामस्य वा सोमस्य लोके कुर्यात् । ८ ।। देवं बर्हिर्वसुवने वसुधेयस्य वेत्वग्नेरग्नेर्देवो नराशँसो वसुवने वसुधेयस्य वेत्वँग्नेरग्नेरिति । यथान्मात उत्तमः । ९ । अग्नये ज्योतिष्मते ऽष्टाकपालं निर्वपेद्वारुणँ यवमयं चरुम् । १० ।। त्वमग्ने सप्रथा असि " वृषा सोमेति वृषण्वन्तावाज्यभागौ । ११ ।। अग्निर्जातो अरोचतेति हविषश्चतस्रः । १२ । अग्नये ऽग्निमते ऽष्टाकपालं निर्वपेन्मैत्रं चरुँ ' सौर्यमेककपालमग्नये व्रतपतये ऽग्नये पथिकृते ऽग्नये शुचये ऽग्नये क्षामवते ऽग्नये तपस्वते जनद्वते पावकवते ऽग्नये तन्तुमते ऽग्नये विविचे ऽष्टाकपालान् । १३ । प्रायश्चित्तिः कल्पः । १४ ।। अग्निनाग्निः समिध्यत इति षोडश हविषाम् । १५ ।। स्वयं कृण्वानस्त्वं तन्तुरिति तन्तुमत्यौ । १६ ।

वि ते विष्वग्वातजूतासो अग्ने भामासः शुचे शुचयश्चरन्ति ।
तुविम्रक्षासो दिव्या नवग्वा वना वनन्ति धृषता रुजन्तः ।। a)
त्वामग्ने मानुषीरीडते विशो होत्राविदँ विविचिँ रत्नधातमम् ।
गुहा सन्तँ सुभग विश्वदर्शतं तुविष्वणसँ सुयजं घृतश्रियम् ।। b)

इति वैविच्यौ । १७ । ।।२।।

वैश्वदेवे " ऽग्नये मथ्यमानायानुब्रूहीत्युक्ते " ऽभि त्वा देव सवितरिति प्रतिपद्यते ।। दस्युहन्तममिति विरमति । १ ।। अग्नये जातायानुब्रूहीत्युक्ते " धनंजयँ रणे रणे३मिति प्रतिपद्यते ।। बिभ्रतीति विरमति । २ ।। अग्नये प्रह्रियमाणायानुब्रूहीत्युक्ते " विशामग्निँ स्वध्वरो३मिति प्रतिपद्यते । ३ ।। यज्ञेन

**2** Cf. MS.IV.10.1-3.
4) 5.1.1.33.
6) S °नुयाजानं the oth. °नी; mss. exc. S °मिडोग्न, बर्हिरग्न.
7) cf.5.1.4.17; 5.73; 6.38; 7.34, 47.
10) cf. MS.I.8.8:127.17-18; II.1.2:3.9-10.
11) M2 Ba वृषवंता°.
13) cf. MS.I.8.9:128.18-130.4; S विवचे, r. विविचये ? cf. su.17b; Āp.Śr.9.3.18.
16) cf. MS.II.13.22:167.14-17.
17) a) S वृषदा the oth. धृषदा; b) mss. exc. S दिशो; S सुंयुज्ज the oth. सुयशं; cf. ṚV.6.6.3; 5.8.3.

**3** Cf. MS.IV.10.3,4.
1-3) cf.1.7.1.42, 44, 45.
1-2) cf. also MS.II.7.3:77.8-9.
3) N प्रहीय° Ba S M2 प्रहीय°.

